॥ गोविन्दराजप्रपत्तिः ॥

यश्चैकशैलनिकटे कमलापुरीश-
गोविन्दराजपदयोरकरोत् प्रपत्तिम् ।
तं वादिभीकरगुरोश्चरणं प्रपद्ये
पात्रं गुरुं वरवरं परमं गुरूणाम् ॥ १॥

श्रीमन् निदान जगतां निखिलाण्डजात-
निर्वाहशक्तिमुखदिव्यगुणैकतान ।
अत्यन्तभोग्यनतदोष निरस्तदोष
गोविन्दराज चरणौ शरणं प्रपद्ये ॥ २॥

रेखारथाङ्गसरसीरुहवज्रशङ्क-
च्छत्राङ्कुशप्रभृतिमङ्गलचिह्नगर्भौ ।
संसारतापहरणे निपुणौ नतानां
गोविन्दराज चरणौ शरणं प्रपद्ये ॥ ३॥

पश्यत्सु सान्द्रभयकौतुकमर्भकेषु
प्रौढेषु सत्सु कृतकृत्यपरायणेषु ।
विध्वंसितोर्ध्वशकटावपि बालभावे
गोविन्दराज चरणौ शरणं प्रपद्ये ॥ ४॥

आलम्ब्य बाहुयुगलेन कुमारभावे
गाढं कराङ्गुलियुगं किल नन्दपत्न्याः ।
अभ्यस्यमानदशचङ्क्रमणाभिरामौ
गोविन्दराज चरणौ शरणं प्रपद्ये ॥ ५॥

घोषाङ्गनाकरसरोरुहतालनाद-
संगीतसंपदनुरूपमनोज्ञनृत्तौ ।
माणिक्यनूपुरमरीचिकृताङ्गलेपौ
गोविन्दराज चरणौ शरणं प्रपद्ये ॥ ६॥

कुट्टाकतामुपगतौ सरसः प्रसह्य
मध्येसरित्सलिलमुद्धतकालियस्य ।
तत्सुन्दरीनयननन्दनसंनिवेशौ
गोविन्दराज चरणौ शरणं प्रपद्ये ॥ ७॥

वासांसि देहि तव कृष्ण वशंवदाना-

मस्माकमाकुलधियामिति गोपकन्याः ।
उद्दिश्य यौ विदधुरञ्जलिमा प्रसादाद्
गोविन्दराज चरणौ शरणं प्रपद्ये ॥ ८॥

गोरक्षणे किल बभूव यदीयरेणु-
रक्रूरमस्तकमणेः सरणिं समेतः ।
तावद्भुतावनुपमावतिपावनौ ते
गोविन्दराज चरणौ शरणं प्रपद्ये ॥ ९॥

मल्लावहे मधुरया मधुराङ्गनानां
फुल्लारविन्ददलतल्लजलोचनानाम् ।
वाण्या प्रशंसितपराध्यर्गतिप्रकारौ
गोविन्दराज चरणौ शरणं प्रपद्ये ॥ १०॥

कंसं निपात्य कनकासनतः पृथिव्या-
मुद्धृत्य सागसमनागसमुग्रसेनम् ।
राज्येऽभिषिच्य विनिवारितभूमिभारौ
गोविन्दराज चरणौ शरणं प्रपद्ये ॥ ११॥

दुर्योधने दुरभिमानिनि दुर्भगाणा-
मग्रेसरे भजति ते शिरसः प्रदेशम् ।
धन्येन यन्निकटतः स्थितमर्जुनेन
गोविन्दराज चरणौ शरणं प्रपद्ये ॥ १२॥

सारथ्यवेषसमलंकृतपाण्डुसूनो-
र्युद्धाङ्गणोज्ज्वलरथाञ्चलसंनिवेशौ ।
सान्द्रेन्द्रनीलपरिभावुकभव्यरूपौ
गोविन्दराज चरणौ शरणं प्रपद्ये ॥ १३॥

भक्त्या प्रसन्नहृदयेन धनंजयेन
यत्रार्चितानि कुसुमानि शिवोत्तमाङ्गे ।
साक्षात्कृतानि सहसाद्भुतवैभवौ तौ
गोविन्दराज चरणौ शरणं प्रपद्ये ॥ १४॥

अस्मद्गुरुप्रभृतिभिः कमलावसानै-
रादर्शितौ करुणया मम देशिकेन्द्रैः ।
सत्त्वोत्तरैः सकलजीवदयापरैस्तै-
र्गोविन्दराज चरणौ शरणं प्रपद्ये ॥ १५॥

अस्मात्पितामहमशेषगुणाभिराम-
माचार्यरत्नमयि वादिभयंकरार्यम् ।
गोवर्धनाद्रिधृतिधारितगोप वीक्ष्य
गोविन्दराज मम दुर्लपितं क्षमस्व ॥ १६॥

। इति श्रीगोविन्दराजप्रपत्तिः संपूर्णा ।